# प्रवेशिका

OR

THE CALCUTTA UNIVERSITY

# SANSKRIT SELECTIONS

FOR THE

MATRICULATION EXAMINATION



## PART II

*Revised Edition*

SECOND REPRINT.

Published by the
UNIVERSITY OF CALCUTTA
1931

*Price One Rupee.*

# सूचीपत्रम्



पृष्ठम्



---

# प्रवेशिका

## रामायणम्

---

### वाल्मीकेः कवित्वलाभः[1]

[ अस्मिन् लोके साम्प्रतं सर्वगुणाकरः कोऽस्तीति
पृष्टवति वाल्मीकये नारदः संक्षेपतो राम-
चरितमुपदिश्य देवलोकं जगाम । ]

स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥१॥
स तु तीरं समासाद्य तमसाया मुनिस्तदा ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥२॥
"अकर्दममिदं तीर्थं भरद्वाज ! निशामय ।
रमणीयं प्रसन्नाम्बु सन्मनुष्य-मनो यथा ॥३॥
न्यस्यतां कलसस्तात ! दीयतां वल्कलं मम ।
इदमेवावगाहिष्ये तमसा-तीर्थमुत्तमम्" ॥४॥
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुनिस्तस्य वल्कलं नियतो गुरोः ॥५॥
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः ।
विचचार ह पश्यंस्तत् सर्वतो विपुलं वनम् ॥६॥

---

[1] बालकाण्डे—द्वितीये सर्गे (Kumbakonam Edition)

तस्याभ्यासे तु मिथुनं चरन्तमनपायिनम् ।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ॥७॥
तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥८॥
तं शोणितपरीताङ्गं चेष्टमानं महीतले ।
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥९॥
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥१०॥
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥११॥
"मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" ॥१२॥
तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ? ॥१३॥
चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् ।
शिष्यं चैवाब्रवीद् वाक्यमिदं स मुनिपुङ्गवः ॥१४॥
"पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा" ॥१५॥

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् ।
प्रतिजग्राह सन्तुष्टस्तस्य तुष्टोऽभवन्मुनिः ॥१६॥
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि ।
तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥१७॥

भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् गुरोः ।
कलसं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥१८॥
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥१९॥
आजगाम ततो ब्रह्मा लोककर्त्ता स्वयं प्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम् ॥२०॥
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ॥२१॥
अथोपविश्य भगवानासने परमार्चिते ।
वाल्मीकये च ऋषये सन्दिदेशासनं ततः ॥२२॥
ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने ।
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥२३॥
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ।
यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥२४॥
शोचन्नेव पुनः क्रौञ्चीमुप श्लोकमिमं जगौ ।
तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम् ॥२५॥
"श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा ।
मच्छन्दादेव ते ब्रह्मन् ! प्रवृत्तेयं सरस्वती ॥२६॥
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम !
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ॥२७॥
वृत्तं कथय रामस्य यथा ते नारदाच्छ्रुतम् ।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ॥२८॥

रामस्य सहसौमित्रे राक्षसानां च सर्वशः ।
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ॥
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
न ते वागनृता काव्ये काचिदत्र भविष्यति ॥२८-३०॥
यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥३१॥
यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ।
तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि" ॥३२॥
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ।

उदारवृत्तार्थपदैर्मनोहरै-
स्तदास्य रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारदर्शनः ॥३३॥

---

## राम-लक्ष्मणयोरत्रि-तपोवन-गमनम्[1]

### सीतानसूया-संवादः

सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः ।
तञ्चापि भगवानत्रिः पुत्त्रवत् प्रत्यपद्यत ॥१॥
स्वयमातिथ्यमादिश्य सर्वमस्य सुसत्कृतम् ।
सौमित्रिञ्च महाभागं सीतां च समसान्त्वयत् ॥२॥

---

[1] अयोध्याकाण्डे—११७-तमे सर्गे ।

पत्नीं च तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ।
सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥३॥
अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
"प्रतिगृह्णीष्व वैदेही"मब्रवीदृषिसत्तमः ॥४॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ।
"दश वर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ।
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ।
उग्रेण तपसा युक्ता नियमैश्चाप्यलङ्कृता ॥
दश वर्षसहस्राणि यया तप्तं महत् तपः ।
अनसूया व्रतैस्तात प्रत्यूहाश्च निबर्हिताः ॥
देवकार्यनिमित्तं च यया संत्वरमाणया ।
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ! ॥५-८॥
तामिमां सर्वभूतानां नमस्कार्यां तपस्विनीम् ।
अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा" ॥९॥
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ।
सीतामालोक्य धर्मज्ञामिदं वचनमब्रवीत् ॥१०॥
"राजपुत्रि ! श्रुतं त्वेतन्मुनेरस्य समीरितम् ।
श्रेयोऽर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् ॥११॥
अनसूयेति या लोके कर्मभिः ख्यातिमागता ।
तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम्" ॥१२॥
सीता त्वेतद्वचः श्रुत्वा राघवस्य यशस्विनी ।
तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली ॥१३॥

शिथिलां, वलितां, वृद्धां, जरापाण्डुरमूर्द्धजाम् ।
सततं वेपमानाङ्गीं, प्रवाते कदलीमिव ॥१४॥
तां तु सीता महाभागामनसूयां पतिव्रताम् ।
अभ्यवादयदव्यग्रां, स्वं नाम समुदाहरत् ॥१५॥
अभिवाद्य च वैदेही तापसीं तां दमान्विताम् ।
बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥१६॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ।
सान्त्वयन्त्यब्रवीद् वृद्धा, "दिष्ट्या धर्ममवेक्षसे ॥१७॥
त्यक्त्वा ज्ञातिजनं सीते ! मानमृद्धिञ्च मानिनि !
अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि ॥१८॥
नगरस्थो, वनस्थो वा, शुभो वा, यदि वाशुभः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥१९॥
दुःशीलः, कामवृत्तो वा, धनैर्वा परिवर्जितः ।
स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥२०॥
नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ।
सर्वत्र योग्यं वैदेहि ! तपःकृतमिवाव्ययम् ॥२१॥
न त्वेवमवगच्छन्ति गुणदोषमसत्स्त्रियः ।
कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ॥२२॥
प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि !
अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥२३॥
त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः ।
स्त्रियः स्वर्गे चरिष्यन्ति यथा पुण्यकृतस्तथा ॥२४॥

तदेवमेनं त्वमनुव्रता सती
पतिव्रतानां समयानुवर्तिनी ।
भव स्वभर्तुः सहधर्मचारिणी
यशश्च धर्मञ्च ततः समाप्स्यसि" ॥२५॥
सा त्वेवमुक्ता वैदेही त्वनसूयानसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥२६॥
"नैतदाश्चर्यमार्यायां यन्मां त्वमनुभाषसे ।
विदितं तु ममाप्येतद् यथा नार्य्याः पतिर्गुरुः ॥२७॥
यद्यप्येष भवेद् भर्ता अनार्यो वृत्तिवर्जितः ।
अद्वैधमेव वर्तव्यं तथाप्यत्र मया भवेत् ॥२८॥
किं पुनर्यो गुणश्लाघ्यः, सानुक्रोशो, जितेन्द्रियः ।
स्थिरानुरागो, धर्मात्मा, मातृवत् पितृवत् प्रियः ॥२९॥
यां वृत्तिं वर्तते रामः कौशल्यायां महाबलः ।
तामेव नृपनारीणामन्यासामपि वर्तते ॥३०॥
आगच्छन्त्याश्च विजनं वनमेवं भयावहम् ।
समाहितं हि मे श्वश्र्वा हृदये यत् स्थिरं मम ॥३१॥
पाणिप्रदानकाले च यत् पुरा त्वग्निसन्निधौ ।
अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥३२॥
पतिशुश्रूषणान्नार्य्यास्तपो नान्यद् विधीयते ।
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ॥३३॥
एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः ।
देवलोके महीयन्ते पुण्येन स्वेन कर्मणा" ॥३४॥

ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरस्याघ्राय प्रोवाच मैथिलीं हर्षयन्त्युत ॥२५॥
"नियमैर्विविधैराप्तं तपो हि महदस्ति मे ।
तत् संश्रित्य बलं सीते ! छन्दये त्वां शुचिव्रते ! ॥२६॥
उपपन्नं च युक्तं च वचनं तव मैथिलि !
प्रीता चास्म्युच्यतां सीते ! करवाणि प्रियञ्च किम्" ॥२७॥
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया ।
कृतमित्यब्रवीत् सीता तपोबल-समन्विताम् ॥२८॥
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराभवत् ।
"सफलं च प्रहर्षं ते वत्से सीते ! करोम्यहम् ॥२९॥
इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च ।
अङ्गरागं च वैदेहि ! महार्हमनुलेपनम् ॥४०॥
मया दत्तमिदं सीते ! तव गात्राणि शोभयेत् ।
अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥४१॥
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे !
शोभयिष्यसि भर्तारं यथा श्रीर्विष्णुमव्ययम्" ॥४२॥
सा वस्त्रमङ्गरागं च, भूषणानि, स्रजस्तथा ।
मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥४३॥
प्रतिगृह्य च तत् सीता प्रीतिदानं यशस्विनी ।
श्लिष्टाञ्जलिपुटा धीरा समुपास्त तपोधनाम् ॥४४॥

---

## सीताहरणम्[1]

[ मायामृगं मारीचमनुगच्छति रामे, लक्ष्मणे च
तदन्वेषणाय गते, परिव्राजकरूपिणो
दशाननस्य सीताहरणम् ]

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ।
अभिचक्राम वैदेहीं परिव्राजक-रूपधृक् ॥१॥
श्लक्ष्णकाषायसंवीतः, शिखी, छत्री, उपानही ।
वामे चांसेऽवसज्याथ शुभे यष्टि-कमण्डलू ।
परिव्राजकरूपेण वैदेहीमन्ववर्तत ॥२॥
तामाससादातिबलो भ्रातृभ्यां रहितां वने ।
रहितां सूर्यचन्द्राभ्यां सन्ध्यामिव महत्तमः ॥३॥
तामपश्यत्ततो बालां राजपुत्रीं यशस्विनीम् ।
रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः ॥४॥
तमुग्रं पापकर्माणं जनस्थानगता द्रुमाः ।
सन्दृश्य न प्रकम्पन्ते, न प्रवाति च मारुतः ॥५॥
शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ।
स्तिमितं गन्तुमारेभे भयाद् गोदावरी नदी ॥६॥
रामस्य त्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे ।
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ॥७॥

---

[1] आरण्यकाण्डे—४६-तमे सर्गे ।

अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् ।
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ।
सहसा भव्यरूपेण तृणैः कूप इवावृतः ॥८॥
अतिष्ठत् प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् ।
शुभां, रुचिरदन्तोष्ठीं, पूर्णचन्द्रनिभाननाम् ।
आसीनां पर्णशालायां, बाष्पशोकाभिपीड़िताम् ॥९॥
सीतां पद्मपलाशाक्षीं, पीतकौषेयवासिनीम् ।
अभ्यगच्छत वैदेहीं हृष्टचेता निशाचरः ॥१०॥
दृष्ट्वा कामशराविद्धो ब्रह्मघोषमुदीरयन् ।
अब्रवीत् प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥११॥
तामुत्तमां त्रिलोकानां पद्महीनामिव श्रियम् ।
विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥१२॥

रावण उवाच—

"रौप्यकाञ्चनवर्णाभे ! पीतकौषेयवासिनि !
कमलानां शुभां मालां पद्मिनीव च बिभ्रती ॥१३॥
ह्रीः, श्रीः, कीर्त्तिः, शुभा लक्ष्मीरप्सरा वा शुभानने !
भूतिर्वा त्वं वरारोहे ! रतिर्वा स्वैरचारिणी ? ॥१४॥
नैव देवी, न गन्धर्वी, न यक्षी, न च किन्नरी ।
नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥१५॥
रूपमग्र्यं च लोकेषु, सौकुमार्यं, वयश्च ते ।
इह वासश्च कान्तारे चित्तमुन्मादयन्ति मे ॥१६॥
सा प्रतिक्राम, भद्रं ते, न त्वं वस्तुमिहार्हसि ।
राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥१७॥

प्रासादाग्राणि रम्याणि नगरोपवनानि च ।
सम्पन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ॥१८॥
राक्षसानामयं वास: कथं तु त्वमिहागता ?
कथमेका महारण्ये न बिभेषि वरानने ! ”
इति प्रशस्ता वैदेही रावणेन दुरात्मना ॥१९॥
द्विजातिवेशेन हि तं दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारै: पूजयामास मैथिली ॥२०॥

द्विजातिवेशेन समीक्ष्य मैथिली
समागतं पात्रकुसुम्भधारिणम् ।
अशक्यमुद्द्रेष्टुमुपायदर्शनान्-
न्यमन्त्रयद् ब्राह्मणवत् तथागतम् ॥२१॥
“इयं बृषी ब्राह्मण ! काममास्यता-
मिदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं
त्वदर्थमव्यग्रमिहोपभुज्यताम् ” ॥२२॥
निमन्त्र्यमाण: प्रतिपूर्णभाषिणीं
नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे दृढ़ं मन:
समर्पयामास वधाय रावण: ॥२३॥
तत: सुवेशं मृगयागतं पतिं
प्रतीक्षमाणा सहलक्ष्मणं तदा ।
निरीक्षमाणा हरितं ददर्श तद्
महद्वनं नैव तु रामलक्ष्मणौ ॥२४॥

रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ॥२५॥
"ब्राह्मणश्चातिथिश्चैष ह्यनुक्तो हि शपेत माम्" ।
इति ध्यात्वा मुहूर्त्तं तु सीता वचनमब्रवीत् ॥२६॥

"दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि, भद्रं ते, रामस्य महिषी प्रिया ॥२७॥
उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥२८॥
तत्र त्रयोदशे वर्षे राजामन्त्रयत प्रभुः ।
अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥२९॥
तस्मिन् सम्भ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारं ममार्य्या याचते वरम् ॥३०॥
परिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे ।
मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ।
द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् ॥३१॥
'नाद्य भोक्ष्ये, न च स्वप्स्ये, न पास्ये च कदाचन ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते' ॥३२॥
इति ब्रुवाणां कैकेयीं श्वशुरो मे स पार्थिवः ।
अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा ॥३३॥
मम भर्ता महातेजा वयसा पञ्चविंशकः ।
अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥३४॥

रामेति प्रथितो लोके सत्यवान् शीलवान् शुचिः ।
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥२५॥
अभिषेकाय तु पितुः समीपं राममागतम् ।
कैकेयी मम भर्तारमित्युवाच द्रुतं वचः ॥२६॥
'तव पित्रा समाज्ञप्तं ममेदं शृणु राघव !
"भरताय प्रदातव्यमिदं राज्यमकण्टकम् ।
त्वया तु खलु वस्तव्यं नव वर्षाणि पञ्च च ।
वने," प्रव्रज काकुत्स्थ ! पितरं मोचयानृतात्' ॥२७॥
तथेत्युवाच तां रामः कैकेयीमकुतोभयः ।
चकार तद्वचः श्रुत्वा भर्ता मम दृढव्रतः ॥२८॥
दद्यान्न प्रतिगृह्णीयात्, सत्यं ब्रूयान्न चानृतम् ।
एतद् ब्राह्मण ! रामस्य व्रतं ध्रुतमनुत्तमम् ॥२९॥
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ॥४०॥
स भ्राता लक्ष्मणो नाम ब्रह्मचारी दृढव्रतः ।
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥४१॥
ते वयं प्रच्युता राज्यात् कैकेय्यास्तु कृते त्रयः ।
विचरामो द्विजश्रेष्ठ ! वनं गम्भीरमोजसा ॥४२॥
समाश्वस मुहूर्त्तं तु शक्यं वस्तुमिह त्वया ।
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥४३॥
स त्वं नाम च, गोत्रं च, कुलमाचक्ष्व तत्त्वतः ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज !" ॥४४॥

एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः ।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥४५॥
"येन वित्रासिता लोकाः सदेवासुरमानुषाः ।
अहं स रावणो नाम सीते! रक्षोगणेश्वरः ॥४६॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौषेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते! ॥४७॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव, भद्रं ते, ममाग्रमहिषी भव ॥४८॥
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्द्धनि ॥४९॥
तत्र सीते! मया सार्द्धं वनेषु विचरिष्यसि ।
न चास्य वनवासस्य स्पृहयिष्यसि भामिनि! ॥५०॥
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः ।
सीते! परिचरिष्यन्ति भार्या भवसि मे यदि" ॥५१॥
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥५२॥
"महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥५३॥
सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसन्धं महाभागमहं राममनुव्रता ॥५४॥
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसङ्काशमहं राममनुव्रता ॥५५॥

पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्त्तिं महाबाहुमहं राममनुव्रता ॥५६॥
त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥५७॥
पादपान् काञ्चनान् नूनं बहून् पश्यसि मन्दभाक् ।
राघवस्य प्रियां भार्यां यस्त्वमिच्छसि राक्षस ! ॥५८॥
क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः ।
आशीविषस्य वदनाद् दंष्ट्रामादातुमिच्छसि ! ॥५९॥
मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि !
कालकूटविषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ! ॥६०॥
अक्षि सूच्या प्रमृजसि, जिह्वया लेक्षि च क्षुरम् !
राघवस्य प्रियां भार्यामधिगन्तुं त्वमिच्छसि ! ॥६१॥
अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि !
सूर्य्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ! ॥६२॥
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ।
अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ! ॥६३॥
कल्याणवृत्तां यो भार्यां रामस्याहर्तुमिच्छसि ।
अयोमुखानां शूलानां मध्ये चरितुमिच्छसि ! ॥६४॥

यदन्तरं सिंहसृगालयोर्वने
यदन्तरं स्यन्दनिका-समुद्रयोः ।
सुराग्र्य-सौवीरकयोर्यदन्तरं
तदन्तरं दाशरथेस्तवैव च ॥६५॥

यदन्तरं काञ्चन-सीसलोहयो-
र्यदन्तरं चन्दनवारि-पङ्कयोः ।
यदन्तरं हस्ति-विड़ालयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥६६॥

यदन्तरं वायस-वैनतेययो-
र्यदन्तरं मद्गु-मयूरयोरपि ।
यदन्तरं हंसक-गृध्रयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥६७॥

तस्मिन् सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
आज्यं यथा मक्षिकयावकीर्णम्" ॥६८॥

इतीव तद्वाक्यमदुष्टभावा
सुदुष्टमुक्ता रजनीचरं तम् ।
गात्रप्रकम्पाद् व्यथिता बभूव
वातोद्धता सा कदलीव तन्वी ॥६९॥

एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः ।
ललाटे भ्रूकुटिं कृत्वा रावणः प्रत्युवाच ह ॥७०॥

"भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि !
रावणो नाम, भद्रं ते, दशग्रीवः प्रतापवान् ॥७१॥

यस्य देवाः सगन्धर्वाः, पिशाचाः, पन्नगोरगाः ।
विद्रवन्ति सदा भीता मृत्योरिव सदा प्रजाः ॥७२॥

येन वैश्रवणो भ्राता वैमात्रः कारणान्तरे ।
द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥७३॥
मद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥७४॥
यस्य तत् पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्यादावर्जितं भद्रे ! येन यामि विहायसम् ॥७५॥
मम सञ्जातरोषस्य मुखं दृष्ट्वैव मैथिलि !
विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥७६॥
यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ।
तीव्रांशुः शिशिरांशुश्च भयात् सम्पद्यते दिवि ॥७७॥
निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः ।
भवन्ति तत्र यत्राहं तिष्ठामि च चरामि च ॥७८॥
मम पारे समुद्रस्य लङ्का नाम पुरी शुभा ।
सम्पूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥७९॥
प्राकारेण परिक्षिप्ता पाण्डुरेण विराजिता ।
हेमकक्ष्या पुरी रम्या वैदूर्यमयतोरणा ॥८०॥
हस्त्यश्वरथसम्बाधा तूर्यनादनिनादिता ।
सर्वकामफलैर्वृक्षैः सङ्कुलोद्यानभूषिता ॥८१॥
तत्र त्वं वस हे सीते ! राजपुत्रि ! मया सह ।
न स्मरिष्यसि नारीणां मानुषीणां मनस्विनि ! ॥८२॥
भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि !
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥८३॥

स्थापयित्वा प्रियं पुत्रं राज्ये दशरथो नृपः ।
मन्दवीर्यस्ततो ज्येष्ठः सुतः प्रस्थापितो वनम् ॥८४॥
तेन किं भ्रष्टराज्येन रामेण गतचेतसा ।
करिष्यसि विशालाक्षि ! तापसेन तपस्विना ॥८५॥
रक्ष राक्षसभर्तारं कामय स्वयमागतम् ।
न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥८६॥
प्रत्याख्याय हि मां भीरु ! पश्चात्तापं गमिष्यसि ।
चरणेनाभिहत्येव पुरूरवसमुर्वशी ॥८७॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः ।
तव भाग्येन सम्प्राप्तं भज मां वरवर्णिनि !" ॥८८॥

एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवीत् परुषं वाक्यं रहिते राक्षसाधिपम् ॥८९॥
"कथं वैश्रवणं देवं सर्वदेवनमस्कृतम् ।
भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ? ॥९०॥
अवश्यं विनशिष्यन्ति सर्वे रावण ! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥९१॥
अपहृत्य शचीं भार्य्यां शक्यमिन्द्रस्य जीवितुम् ।
न हि रामस्य भार्य्यां मामानीय स्वस्तिमान् भवेत् ॥९२॥

जीवेच्चिरं वज्रधरस्य हस्ता-
च्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं राक्षस ! धर्षयित्वा
पीतामृतस्यापि तवास्ति मोक्षः" ॥९३॥

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं समाहत्य चकार सुमहद्वपुः ॥८४॥
स मैथिलीं पुनर्वाक्यं बभाषे वाक्यकोविदः ।
"नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥८५॥
उद्वहेयं भुजाभ्यां वै मेदिनीमम्बरे स्थितः ।
आपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥८६॥
अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् ।
कामरूपेण उन्मत्ते ! पश्य मां कामरूपिणम्" ॥८७॥
एवमुक्तवतस्तस्य रावणस्य शिखिप्रभे ।
क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥८८॥
सद्यः सौम्यं परित्यज्य तीक्ष्णरूपं स रावणः ।
स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥८९॥
संरक्तनयनः श्रीमांस्तप्तकाञ्चनभूषणः ।
क्रोधेन महताविष्टो नीलजीमूतसन्निभः ।
दशास्यो विंशतिभुजो बभूव क्षणदाचरः ॥१००॥
अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः ।
जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥१०१॥
तं दृष्ट्वा गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाभुजम् ।
प्राद्रवन् मृत्युसङ्काशं भयार्ता वनदेवताः ॥१०२॥
स तु मायामयो दिव्यः खरयुक्तः खरस्वनः ।
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ॥१०३॥

ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वनः ।
अङ्केनादाय वैदेहीं रथमारोहयत् तदा ॥१०४॥
सा गृहीतातिचुक्रोश रावणेन यशस्विनी ।
रामेति सीता दुःखार्ता रामं दूरगतं वने ॥१०५॥
तामकामां स कामातः पन्नगेन्द्रवधूमिव ।
विचेष्टमानामादाय उत्पपाताथ रावणः ॥१०६॥
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥१०७॥
"हा लक्ष्मण ! महाबाहो ! गुरुचित्तप्रसादक !
ह्रियमाणां न जानीषे रक्षसा कामरूपिणा ॥१०८॥
जीवितं सुखमर्थं च धर्महेतोः परित्यजन् ।
ह्रियमाणामधर्मेण मां राघव ! न पश्यसि ? ॥१०९॥
ननु नामाविनीतानां विनेतासि परन्तप !
कथमेवंविधं पापं न त्वं शाधि हि रावणम् ? ॥११०॥
न तु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ।
कालोऽप्यङ्गीभवत्यत्र शस्यानामिव पक्तये ॥१११॥
त्वं कर्म कृतवानेतत् कालोपहतचेतनः ।
जीवितान्तकरं घोरं रामाद् व्यसनमाप्नुहि ॥११२॥
आमन्त्रये जनस्थानं कर्णिकारांश्च पुष्पितान् ।
क्षिप्रं रामाय शंसध्वं 'सीतां हरति रावणः' ॥११३॥
हंस-सारस-संघुष्टां वन्दे गोदावरीं नदीम् ।
क्षिप्रं रामाय शंसध्वं 'सीतां हरति रावणः' ॥११४॥

दैवतानि च यान्यस्मिन् वने विविधपादपे ।
नमस्करोम्यहं तेभ्यो भर्त्तुः शंसत मां हृताम् ॥११५॥
यानि कानिचिदप्यत्र सत्त्वानि विविधानि च ।
सर्वाणि शरणं यामि मृगपक्षिगणानि वै ॥११६॥
क्रियमाणां प्रियां भर्त्तुः प्राणिभ्योऽपि गरीयसीम् ।
'विवशा ते हृता सीता रावणेने'ति शंसत ॥११७॥
विदित्वा तु महाबाहुरमुत्रापि महाबलः ।
आनेष्यति पराक्रम्य ववस्वतहृतामपि" ॥११८॥

सा तदा करुणा वाचो विलपन्ती सुदुःखिता ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥११९॥
सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशं गता ।
समाक्रन्दद् भयपरा दुःखोपहतया गिरा ॥१२०॥
"जटायो ! पश्य मामाय ! क्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेणाकरुणं पापकर्मणा ॥१२१॥
नैष वारयितुं शक्यस्त्वया क्रूरो निशाचरः ।
रामाय तु यथातथ्यं जटायो ! हरणं मम ।
लक्ष्मणाय च तत् सर्वमाख्यातव्यमशेषतः" ॥१२२॥



तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे ।
निरैक्षद्रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥१२३॥
ततः पर्वतकूटाभस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥१२४॥

"दशग्रीव ! स्थितो धर्मे पुराणे सत्यसंश्रवः ।
भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि साम्प्रतम् ।
जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः ॥१२५॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
लोकानां च हिते युक्तो रामो दशरथात्मजः ॥१२६॥
तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि ।
कथं राजा स्थितो धर्मे परदारान् परामृशेत् ? ॥१२७॥
रक्षणीया विशेषेण राजदारा महाबल !
निवर्तय गतिं नीचां परदाराभिमर्शनात् ॥१२८॥
न तत् समाचरेद्धीरो यत् परोऽस्य विगर्हयेत् ।
यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शनात् ॥१२९॥
पापस्वभावश्चपलः कथं त्वं रक्षसां वर !
ऐश्वर्यमभिसम्प्राप्तो विमानमिव दुष्कृतिः ॥१३०॥
विषये वा पुरे वा ते यदा रामो महाबलः ।
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ? ॥१३१॥
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा ।
दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥१३२॥
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ?
ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ? ॥१३३॥
स भारः सौम्य ! भर्तव्यो यो नरं नावसादयेत् ।
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥१३४॥

यत् कृत्वा न भवेद्धर्मो, न कीर्त्तिर्न यशो ध्रुवम् ।
शरीरस्य भवेत् खेदः, कस्तत् कर्म समाचरेत् ? ॥१२५॥
षष्टिर्वर्षसहस्राणि जातस्य मम रावण !
पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥१२६॥
वृद्धोऽहं, त्वं युवा, धन्वी, सरथः, कवची, शरी ।
न चाप्यादाय कुशली वैदेहीं मे गमिष्यसि ॥१२७॥
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥१२८॥
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण !
शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥१२९॥
असकृत् संयुगे येन निहता दैत्यदानवाः ।
नचिराच्चीरवासास्त्वां रामो युधि वधिष्यति ॥१४०॥
किन्तु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ ।
क्षिप्रं त्वं नश्यसे नीच ! तयोर्भीतो न संशयः ॥१४१॥
न हि मे जीवमानस्य नयिष्यसि शुभामिमाम् ।
सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥१४२॥
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ।
जीवितेनापि रामस्य तथा दशरथस्य च ॥१४३॥
तिष्ठ तिष्ठ दशग्रीव ! मुहूर्तं पश्य रावण !
वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात्" ॥१४४॥

इत्युक्तः क्रोध-ताम्राक्षस्तप्त-काञ्चन कुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥१४५॥

स सम्प्रहारस्तुमुलस्तयोस्तस्मिन् महामृधे ।
बभूव वातोद्धतयोर्मेघयोर्गगने यथा ॥१४६॥
तद् बभूवाद्भुतं युद्धं गृध्र-राक्षसयोस्तदा ।
सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥१४७॥
ततो नालीक-नाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
अभ्यवर्षन् महाघोरैर्गृध्रराजं महाबलम् ॥१४८॥
स तानि शरजालानि गृध्रः पत्ररथेश्वरः ।
जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥१४९॥
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
चकार बहुधा गात्रे व्रणान् पतगसत्तमः ॥१५०॥
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् ।
मृत्युदण्डनिभान् घोरान् शत्रोर्निधनकाङ्क्षया ॥१५१॥
स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः ।
बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥१५२॥
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् ।
अचिन्तयित्वा बाणांस्तान् राक्षसं समभिद्रवत् ॥१५३॥
स तानि शरजालानि पक्षाभ्यां तु विधूय च ।
चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥१५४॥
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् ।
पक्षाभ्यां च महातेजा व्यधुनोत्पतगेश्वरः ॥१५५॥
काञ्चनोरश्छदान् दिव्यान् पिशाचवदनान् खरान् ।
तांश्चास्य जवसम्पन्नाञ्जघान समरे बली ॥१५६॥

अथ त्रिवेणुसम्पन्नं कामगं पावकार्च्चिषम् ।
मणिसोपानचित्राङ्गं बभञ्ज च महारथम् ॥१५७॥
पूर्णचन्द्रप्रतीकाशं छत्रञ्च व्यजनैः सह ॥
पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥१५८॥
सारथिश्चास्य वेगेन तुण्डेन च महच्छिरः ।
पुनर्व्यपाहनच्छ्रीमान् पक्षिराजो महाबलः ॥१५९॥
स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥१६०॥
दृष्ट्वा निपातितं भूमौ रावणं भग्नवाहनम् ।
साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥१६१॥
परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ।
उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥१६२॥
तं प्रहृष्टं निधायाङ्के रावणं जनकात्मजाम् ।
गच्छन्तं खड्गशेषं च प्रनष्ट-हतसाधनम् ॥
गृध्रराजः समुत्पत्य रावणं समभिद्रवत् ।
समावार्य महातेजा जटायुरिदमब्रवीत् ॥१६३-१६४॥
" वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण !
अल्पबुद्धे ! हरस्येनां वधाय खलु रक्षसाम् ॥१६५॥
समित्रबन्धुः, सामात्यः, सबलः, सपरिच्छदः ।
विषपानं पिबस्येतत् पिपासित इवोदकम् ॥१६६॥
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति, तथा त्वं विनशिष्यसि ॥१६७॥

बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ?
वधाय बडिशं गृह्य सामिषं जलजो यथा ॥१६८॥
न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण !
धर्षणञ्चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥१६९॥
यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ।
तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥१७०॥
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण !
शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥१७१॥
परेतकाले पुरुषो यत् कर्म प्रतिपद्यते ।
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत्" ॥१७२॥

एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥१७३॥
तं गृहीत्वा नखैस्तीक्ष्णैर्विददार समन्ततः ।
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥१७४॥
स तदा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ।
अमर्षस्फुरितोष्ठः सन् प्राकम्पत च राक्षसः ॥१७५॥
सम्परिष्वज्य वैदेहीं वामेनाङ्केन रावणः ।
तलेनाभिजघानार्तो जटायुं क्रोधमूर्च्छितः ॥१७६॥

जटायुस्तमतिक्रम्य तुण्डेनास्य खगाधिपः ।
वामबाहून् दश तदा व्यपाहरदरिन्दमः ॥१७७॥
सञ्छिन्नबाहोः सद्यो वै बाहवः सहसाभवन् ।
विषज्वालावलीयुक्ता वल्मीकादिव पन्नगाः ॥१७८॥

ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥१७९॥
तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः ।
पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥१८०॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात महागृध्रो धरण्यामल्पजीवितः ॥१८१॥
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥१८२॥
तं नीलजीमूतनिकाशकल्पं
स पाण्डुरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काधिपतिः पृथिव्यां
जटायुषं शान्तमिवाग्निदावम् ॥१८३॥
ततस्तु तं पत्त्ररथं महीतले
निपातितं रावणवेगमर्दितम् ।
पुनश्च संगृह्य शशिप्रभानना
रुरोद सीता जनकात्मजा तदा ॥१८४॥
तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् ।
अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥१८५॥
तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् ।
"मुञ्च मुञ्चे"ति बहुशः प्राप तां राक्षसाधिपः ॥१८६॥
क्रोशन्तीं "राम रामे"ति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ॥१८७॥

प्रधर्षितायां सीतायां बभूव सचराचरम् ।
जगत् सर्वममर्यादं तमसान्धेन संवृतम् ॥१८८॥

---

## चन्द्रोदयवर्णनम् [1]

चन्द्रोऽपि साचिव्यमिवास्य कुर्वं-
स्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोका-
नुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥१॥

शङ्खप्रभं क्षीरमृणालवर्ण-
मुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः [2]
पोप्लूयमानं सरसीव हंसम् ॥२॥

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान् भुवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥३॥

---

[1] सुन्दरकाण्डे—पञ्चमे सर्गे ।

[2] लङ्कायां सीतान्वेषणार्थं व्रजन् हनूमान् ।

लोकस्य पापानि विनाशयन्तं
महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥४॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥५॥

हंसो यथा राजत-पञ्जरस्थः
सिंहो यथा मन्दर-कन्दरस्थः ।
वीरो यथा गर्वित-कुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥६॥

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोर्ध्वशृङ्गः ।
हस्तीव जाम्बूनद-बद्धशृङ्गो
विभाति चन्द्रः परिपूर्णशृङ्गः ॥७॥

विनष्ट-शीताम्बु-तुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवाञ् शशाङ्कः ॥८॥

शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥८॥

---

## रावणशक्त्याहतस्य लक्ष्मणस्य पुनरुत्थानम्[1]

शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघ-परिप्लुतम् ।
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ।
विसृजन्नेव बाणौघान् सुषेणमिदमब्रवीत् ॥१-२॥
"एष रावणवीर्येण लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥३॥
शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥४॥
अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ? ॥५॥
लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥६॥
अवसीदन्ति गात्राणि स्वप्रयाने नृणामिव ।
चिन्ता मे जायते तीव्रा मुमूर्षा चोपजायते" ॥७॥

---

[1] युद्धकाण्डे—१०२-तमे सर्गे ।

भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना।
विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम्।
परं विषादमापन्नो विललापाकुलेन्द्रियः ॥८॥
"भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांशुषु
विजयोऽपि हि मे शूर! न प्रियायोपकल्पते।
अचक्षुर्विषयश्चन्द्रः कां प्रीतिं जनयिष्यति? ॥८॥
किं मे युद्धेन? किं प्राणैर्युद्धे कार्यं न विद्यते।
यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ॥१०॥
यथैव मां वनं यान्तमनुयाति महाद्युतिः।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥११॥
देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥१२॥
सीतया किन्नु राज्येन लक्ष्मणेन विना मम?
किन्नु वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम् ॥१३॥
उपालम्भं न शक्ष्यामि सोढ़ुं दत्तं सुमित्रया।
किन्नु वक्ष्यामि कौशल्यां मातरं किन्नु केकयीम्? ॥१४॥
भरतं किन्नु वक्ष्यामि शत्रुघ्नं च महाबलम्?
सह तेन वनं यातो विना तेनागतः कथम्? ॥१५॥
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम्।
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि।
येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः? ॥१६॥

हा भ्रातर्मनुजश्रेष्ठ ! शूराणां प्रवर ! प्रभो !
एकाकी किन्नु मां त्यक्त्वा परलोकाय गच्छसि ? ॥१७॥
विलपन्तं च मां भ्रातः ! किमर्थं नावभाषसे ?
उत्तिष्ठ, पश्य, किं शेषे ? दीनं मां पश्य चक्षुषा ॥१८॥
शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च ।
विषण्णस्य महाबाहो ! समाश्वासयिता मम" ॥१९॥
रामामेवं ब्रुवाणं तं शोकव्याकुलितेन्द्रियम् ।
आश्वासयन्नुवाचेदं सुषेणः परमं वचः ॥२०॥
"त्यजेमां नरशार्दूल ! बुद्धिं वैक्लव्यकारिणीम् ।
शोकसञ्जननीं चिन्तां तुल्यां बाणैश्चमूमुखे ॥२१॥
नव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
न ह्यस्य विकृतं वक्त्रं न च श्यामं न निष्प्रभम् ॥२२॥
सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यताम् ।
पद्मपत्रतलौ हस्तौ, सुप्रसन्ने च लोचने ॥२३॥
नेदृशं दृश्यते रूपं गतासूनां विशाम्पते !
विषादं मा कृथा वीर ! सप्राणोऽयमरिन्दमः ॥२४॥
आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ।
सोच्छ्वासं हृदयं वीर ! कम्पमानं मुहुर्मुहुः" ॥२५॥
एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ।
समीपस्थमुवाचेदं हनुमन्तं महाकपिम् ॥२६॥
"सौम्य ! शीघ्रमितो गत्वा शैलमोषधिपर्वतम् ।
दक्षिणे शिखरे जातां महौषधिमिहानय ॥२७॥

विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
सञ्जीवकरणीं वीर ! सन्धानीं च महौषधिम् ।
सञ्जीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय" ॥२८॥

इत्येवमुक्तो हनुमान् गत्वा चौषधिपर्वतम् ।
चिन्तामभ्यगमच्छ्रीमानजानंस्तां महौषधिम् ॥२९॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः ।
"इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥३०॥
अस्मिंस्तु शिखरे जातामोषधिं तां सुखावहाम् ।
प्रतर्केणावगच्छामि सुषेणो ह्येवमब्रवीत् ॥३१॥
अगृह्य यदि गच्छामि विशल्यकरणीमहम् ।
कालात्ययेन दोषः स्याद् वैक्लव्यं च महद् भवेत्" ॥३२॥
इति सञ्चिन्त्य हनुमान् गत्वा क्षिप्रं महाबलः ।
आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेस्तटम् ।
फुल्लनानातरुगणं समुत्पाट्य महाबलः ।
गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥३३-३४॥
स नीलमिव जीमूतं तोयपूर्णं नभस्तलात् ।
उत्पपात गृहीत्वा तु हनूमाञ् शिखरं गिरेः ॥३५॥

समागम्य महावेगः सन्न्यस्य शिखरं गिरेः ।
विश्रम्य किञ्चिद्धनुमान् सुषेणमिदमब्रवीत् ॥३६॥
"ओषधीं नावगच्छामि तामहं हरिपुङ्गव !
तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया" ॥३७॥

एवं कथयमानं तु प्रशस्य पवनात्मजम् ।
सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधिम् ॥३८॥
विस्मितास्तु बभूवुस्ते सर्वे वानरयूथपाः ।
दृष्ट्वा तु हनुमत्कर्म सुरैरपि सुदुष्करम् ॥३९॥

ततः सङ्क्षोदयित्वा तामोषधिं वानरोत्तमः ।
लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः ॥४०॥
सशल्यः स समाघ्राय लक्ष्मणः परवीरहा ।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥४१॥
तमुत्थितं तु हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ।
"साधु साध्वि"ति सुप्रीता लक्ष्मणं प्रत्यपूजयन् ॥४२॥
"एह्येही"त्यब्रवीद्रामो लक्ष्मणं परवीरहा ।
सस्वजे गाढ़मालिङ्ग्य बाष्पपर्याकुलेक्षणः ॥४३॥
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ।
"दिष्ट्या त्वां वीर ! पश्यामि मरणात् पुनरागतम् ॥४४॥
न हि मे जीवितेनार्थः, सीतया च, जयेन वा ।
को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते ?" ॥४५॥

इत्येवं ब्रुवतस्तस्य राघवस्य महात्मनः ।
खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥४६॥
"तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम !
लघुः कश्चिदिवासत्त्वो नैवं त्वं वक्तुमर्हसि ॥४७॥
न हि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः ।
लक्षणं हि महत्त्वस्य प्रतिज्ञा-परिपालनम् ॥४८॥

नराश्रयमुपगन्तुं च नालं ते मत्कृतेऽनघ !
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥४८॥
न जीवन् यास्यति शत्रुस्तव बाणवशं गतः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥५०॥
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ।
यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥५१॥
यदि वधमिच्छसि रावणस्य संख्ये
यदि च कृतां हि तवेच्छसि प्रतिज्ञाम् ।
यदि तव राजसुताभिलाष आर्य !
कुरु च वचो मम शीघ्रमद्य वीर !" ॥५२॥

---

## रामाश्वमेधसभायां वाल्मीकेराज्ञया कुशीलवयो रामायणगानम्, सीतायाः पातालप्रवेशश्च [1]

तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ ।
यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥१॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्य-विनिर्मिताम् ।
अपूर्वां पाठ्यजातिञ्च गेयेन समलङ्कृताम् ॥२॥

---

[1] उत्तरकाण्डे—९४-तमे सर्गे ।

प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम् ।
बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥३॥

अथ कर्मान्तरे राजा समाहूय महामुनिम् ।
पार्थिवांश्च नरव्याघ्रः पण्डितान् नैगमांस्तथा ॥
पौराणिकान् शब्दविदो ये वृद्धाश्च द्विजातयः ।
स्वराणां लक्षणज्ञांश्च प्रोत्सुकान् द्विजसत्तमान् ॥
पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान् ।
कलामात्राविशेषज्ञाञ् ज्योतिषि च परं गतान् ॥
क्रियाकल्पविदश्चैव तथा कार्यविशारदान् ।
हेतूपचारकुशलान् हैतुकांश्च बहुश्रुतान् ॥
छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान् ।
चित्रज्ञान् वृत्तसूत्रज्ञान् नृत्यगीतविशारदान् ।
एतान् सर्वान् समाहूय गातारौ समवेशयत् ॥४-८॥

तेषां संवदतां तत्र श्रोतृणां हर्षवर्द्धनम् ।
गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥९॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ।
न च तृप्तिं ययुः सर्वे श्रोतारो गेयसम्पदा ॥१०॥
हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः ।
पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥११॥
ऊचुः परस्परं चेदं सव एव समाहिताः ।
"उभौ रामस्य सदृशौ बिम्बाद् बिम्बमिवोद्धृतौ ॥१२॥

जटिलौ यदि न स्यातां न वल्कलधरौ यदि ।
विशेषं नाधिगच्छामो गायतो राघवस्य च" ॥१३॥
ततोऽपराह्णसमये राघवः समभाषत ।
"अष्टादश सहस्राणि सुवर्णस्य महात्मनोः ।
प्रयच्छ शीघ्रं काकुत्स्थ ! यदन्यदभिकाङ्क्षितम्" ।
ददौ स शीघ्रं काकुत्स्थो बालयोर्वै पृथक् पृथक् ॥१४-१५॥
दीयमानं सुवर्णं तु नागृह्णातां कुशीलवौ ।
ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥१६॥
"वन्येन फलमूलेन निरतौ वनवासिनौ ।
सुवर्णेन हिरण्येन किं करिष्यावहे वने ?" ॥१७॥
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः ।
श्रोतारश्चैव रामश्च सर्वं एव सुविस्मिताः ॥१८॥
तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः ।
पप्रच्छ सुमहातेजास्तावुभौ मुनिदारकौ ॥१९॥
"किम्प्रमाणमिदं काव्यं, का प्रतिष्ठा महात्मनः ?
कर्ता काव्यस्य महतः क चासौ मुनिपुङ्गवः ?" ॥२०॥
पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ।
"वाल्मीकिर्भगवान् कर्ता सम्प्राप्तो यज्ञसंविधम् ॥२१॥
आदिप्रभृति वै राजन् ! पञ्च सर्गशतानि च ।
काण्डानि षट् कृतानीह सोत्तराणि महात्मना ॥२२॥
कृतानि गुरुणास्माकमृषिणा चरितं तव ।
प्रतिष्ठा जीवितं यावत् तावत् सर्वस्य वर्तते ॥२३॥

यदि बुद्धिः कृता राजन् ! श्रवणाय महारथ !
कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः” ॥२४॥
“बाढ़”मित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवौ ।
प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुङ्गवः ॥२५॥
रामो बहून्यहान्येव तद् गीतं परमं शुभम् ।
शुश्राव मुनिभिः सार्द्धं पार्थिवैः सह वानरैः ॥२६॥
तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥२७॥
दूतान् शुद्धसमाचारानाहूयात्ममनीषया ।
“मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥२८॥
‘यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम्’ ॥२९॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥३०॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च” ॥३१॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् ।
दूताः सम्प्रययुर्वाटं यत्र वै मुनिपुङ्गवः ॥३२॥
ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् ।
ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥३३॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥३४॥

"एवं भवतु, भद्रं वो, यथा वदति राघवः।
तथा करिष्यति सीता, दैवतं हि पतिः स्त्रियः" ॥२५॥
तथोक्ता मुनिना सर्व्वे राजदूता महौजसः।
प्रत्येत्य राघवं सर्व्वं मुनिवाक्यं बभाषिरे ॥२६॥
　ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः।
ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥२७॥
"भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः।
पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते" ॥२८॥
तस्य तद् वचनं श्रुत्वा राघवस्य महात्मनः।
सर्व्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥२९॥
राजानश्च महात्मानः प्रशंसन्ति स्म राघवम्।
"उपपन्नं नरश्रेष्ठ! त्वय्येव भुवि नान्यतः" ॥४०॥
एवं विनिश्चयं कृत्वा "श्वोभूत" इति राघवः।
विसर्ज्जयामास तदा सर्व्वांस्तान् मधुसूदनः ॥४१॥
　तस्यां रजन्यां व्युष्टायां यज्ञवाटं गतो नृपः।
ऋषीन् सर्व्वान् महातेजाः शब्दापयति राघवः ॥४२॥
अथ तत्र समाजग्मुर्मुनयः संशितव्रताः।
कौतूहलसमाविष्टाः सर्व्व एव समन्ततः ॥४३॥
राक्षसाश्च महावीर्या वानराश्च महाबलाः।
क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥४४॥
नानादेशागताश्चैव ब्राह्मणाः संशितव्रताः।
सीताशपथवीक्षार्थं सर्व्व एव समागताः ॥४५॥

तदा समागतं सर्वमश्मभूतमिवाचलम् ।
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥४६॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
रामं मनोगतं कृत्वा साश्रुनेत्रा कृताञ्जलिः ॥४७॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥४८॥
ततो हलहलाशब्दः सर्वेषामिवमाबभौ ।
दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥४९॥
"साधु रामे"ति केचित्तु "साधु सीते"ति चापरे ।
"उभाविव" च तत्रान्ये प्रेक्षकाः सम्प्रचुक्रुशुः ॥५०॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।
सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥५१॥
"इयं दाशरथे! सीता सुव्रता धर्मचारिणी ।
अपवादात् परित्यक्ता ममाश्रम-समीपतः ॥५२॥
लोकापवाद-भीतस्य तव राम! महाव्रत!
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥५३॥
इमौ च जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षौ सत्यमेतद् ब्रवीमि ते ॥५४॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन!
न स्मराम्यनृतं वाक्यमिमौ हि तव पुत्रकौ ॥५५॥
बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥५६॥

मनसा, कर्मणा, वाचा भूतपूर्वं न किल्बिषम् ।
तस्याः फलमुपाश्नीयामपापा यदि मैथिली ॥५७॥

अहं पञ्चसु भूतेषु मनःषष्ठेषु राघव !
विचिन्त्य सीतां शुद्धेति जग्राह वननिर्झरे ॥५८॥

इयं शुद्धसमाचारा ह्यपापा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥५९॥

तस्मादियं नरवरात्मज ! शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवाद-कलुषीकृतचेतसा यत्
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा" ॥६०॥

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
प्राञ्जलिर्जनतामध्ये दृष्ट्वा तां वरवर्णिनीम् ॥६१॥

"एवमेतन्महाभाग ! यथा वदसि धर्मवित् !
प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषः ॥६२॥

प्रत्ययश्च पुरा दत्तो वैदेह्या सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥६३॥

लोकापवादो बलवान् येन त्यक्ता हि मैथिली ।
सेयं लोकभयाद् ब्रह्मन्नपापेत्यभिजानता ।
परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ॥६४॥

जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे" ॥६५॥

अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः ।
सीतायाः शपथे तस्मिन् सर्वं एव समागताः ॥६६॥
पितामहं पुरस्कृत्य सर्वं एव समागताः ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥६७॥
साध्याश्च देवाः सर्वे ते सर्वे च परमर्षयः ।
नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः ।
सीता-शपथसम्भ्रान्ताः सर्वं एव समागताः ॥६८॥
दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् ।
प्रत्ययो मे मुनिश्रेष्ठ ! ऋषिवाक्यैरकल्मषः ।
शुद्धायां जगतो मध्ये वदेह्यां प्रीतिरस्तु मे" ॥६९॥
ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः ।
तं जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥७०॥
तदद्भुतमिवाचिन्त्यं निरैक्षन्त समाहिताः ।
मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥७१॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत् प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥७२॥
"यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥७३॥
मनसा, कर्मणा, वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥७४॥
यथैतत् सत्यमुक्तं मे, वेद्मि रामात् परं न च ।
तथा मे माधवी देवी विवरं दातुमर्हति" ॥७५॥

तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम् ।
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥७६॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥७७॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥७८॥

तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥७९॥
साधुकारश्च सुमहान् देवानां सहसोत्थितः ।
"साधु साध्विति वै सीते ! यस्यास्ते शीलमीदृशम्" ॥८०॥
एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः ।
व्याजह्रुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥८१॥
यज्ञवाट-गताश्चापि मुनयः सर्वं एव ते ।
राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥८२॥
अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ।
दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥८३॥
केचिद् विनेदुः संहृष्टाः, केचिद् ध्यानपरायणाः ।
केचिद्रामं निरीक्षन्ते, केचित् सीतामचेतसः ॥८४॥
सीताप्रवेशनं दृष्ट्वा तेषामासीत् समागमः ।
तन्मुहूर्तमिवात्यर्थं समं सम्मोहितं जगत् ॥८५॥

---

# महाभारतम्

## धृतराष्ट्र-विलापप्रसङ्गतो महाभारतस्य प्रसिद्ध-वृत्तान्तसमूहनिर्द्देशः[1]

धृतराष्ट्र उवाच—

"यदाश्रौषं धनुरायम्य चित्रं
विद्धं लक्ष्यं पातितं वै पृथिव्याम् ।
कृष्णां हृतां प्रेक्षतां सर्व्वराज्ञां
तदा नाशंसे विजयाय सञ्जय ! ॥१॥

यदाश्रौषं द्वारकायां सुभद्रां
प्रसह्योढ़ां माधवीमर्ज्जुनेन ।
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ
तदा नाशंसे विजयाय सञ्जय ! ॥२॥

यदाश्रौषं देवराजं प्रवृष्टं
शरैर्दिव्यैर्वारितं चार्ज्जुनेन ।
अग्निं तदा तर्पितं खाण्डवे च
तदा नाशंसे विजयाय सञ्जय ! ॥३॥

---

[1] आदिपर्व्वणि—प्रथमेऽध्याये ।

यदाश्रौषं जातुषाद् वेश्मनस्तान्
मुक्तान् पार्थान् पञ्च कुन्त्या समेतान् ।
युक्तं चैषां विदुरं स्वार्थसिद्धै
तदा नाशंसे विजयाय सञ्जय ! ॥४॥

यदाश्रौषं द्रौपदीं रङ्गमध्ये
लक्ष्यं भित्त्वा निर्जितामर्जुनेन ।
शूरान् पाञ्चालान् पाण्डवेयांश्च युक्तां-
स्तदा नाशंसे विजयाय सञ्जय ! ॥५॥

यदाश्रौषं मागधानां वरिष्ठं
जरासन्धं क्षत्रमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
तदा नाशंसे विजयाय सञ्जय ! ॥६॥

यदाश्रौषं दिग्जये पाण्डुपुत्रै-
र्वशीकृतान् भूमिपालान् प्रसह्य ।
महाक्रतुं राजसूयं कृतं च
तदा नाशंसे विजयाय सञ्जय ! ॥७॥

यदाश्रौषं द्रौपदीमश्रुकण्ठीं
सभां नीतां दुःखितामेकवस्त्राम् ।
रजस्वलां नाथवतीमनाथव-
त्तदा नाशंसे विजयाय सञ्जय ! ॥८॥

यदाश्रौषं द्यूतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् ।
अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय सञ्जय ! ॥९॥

यदाश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय सञ्जय ! ॥१०॥

यदाश्रौषमर्जुनं देवदेवं
किरातरूपं त्र्यम्बकं तोष्य युद्धे ।
अवाप्तवन्तं पाशुपतं महास्त्रं
तदा नाशंसे विजयाय सञ्जय ! ॥११॥

यदाश्रौषं त्रिदिवस्थं धनञ्जयं
शक्रात् साक्षाद् दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं
तदा नाशंसे विजयाय सञ्जय ! ॥१२॥

यदाश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
देवैरजेया निर्जिताश्चार्जुनेन
तदा नाशंसे विजयाय सञ्जय ! ॥१३॥

यदाश्रौषमसुराणां वधार्थे
किरीटिनं यान्तममित्रकर्षणम् ।
कृतार्थं चाप्यागतं शक्रलोका-
त्तदा नाशंसे विजयाय सञ्जय ! ॥१४॥

यदाश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोचणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय सञ्जय ! ॥१५॥

यदाश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत !
प्रश्नान् कांश्चिद् विब्रुवाणं च सम्यक्
तदा नाशंसे विजयाय सञ्जय ! ॥१६॥

यदाश्रौषं न विदुर्मामकास्तान्
प्रच्छन्नरूपान् वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया तां-
स्तदा नाशंसे विजयाय सञ्जय ! ॥१७॥

यदाश्रौषं मामकानां वरिष्ठान्
धनञ्जयेनैकरथेन भग्नान् ।
विराटराष्ट्रे वसता महात्मना
तदा नाशंसे विजयाय सञ्जय ! ॥१८॥

यदाश्रौषं सत्कृतां मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय।
ताञ्चार्जुनः प्रत्यगृह्णात् सुतार्थे
तदा नाशंसे विजयाय सञ्जय! ॥१८॥

यदाश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य स्वजनात् प्रच्युतस्य।
अक्षौहिणीः सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय सञ्जय! ॥२०॥

यदाश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम्।
यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय सञ्जय! ॥२१॥

यदाश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम्।
शमं कुर्वाणमकृतार्थञ्च यातं
तदा नाशंसे विजयाय सञ्जय! ॥२२॥

यदाश्रौषं कर्ण-दुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय सञ्जय! ॥२३॥

यदाश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शान्तनवं च तेषाम् ।
भारद्वाजं चाशिषोऽनुब्रुवाणं
तदा नाशंसे विजयाय सञ्जय ! ॥२४॥

यदा कर्णो भीष्ममुवाच वाक्यं
'नाहं योत्स्ये युध्यमाने त्वयी'ति ।
हित्वा सेनामपचक्राम चापि
तदा नाशंसे विजयाय सञ्जय ! ॥२५॥

यदाश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् ।
त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय सञ्जय ! ॥२६॥

यदाश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान् दर्शयानं शरीरे
तदा नाशंसे विजयाय सञ्जय ! ॥२७॥

यदाश्रौषं भीष्ममित्रकर्षणं
निघ्नन्तमाजावयुतं रथानाम् ।
नैषां कश्चिद् वध्यते ख्यातरूप-
स्तदा नाशंसे विजयाय सञ्जय ! ॥२८॥

यदाश्रौषं चापगेयेन संख्ये
स्वयं मृत्युं विहितं धार्मिकेण ।
यच्चाकार्षुः पाण्डवेयाः प्रहृष्टा-
स्तदा नाशंसे विजयाय सञ्जय ! ॥२८॥

यदाश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतः स्थापयित्वा
तदा नाशंसे विजयाय सञ्जय ! ॥३०॥

यदाश्रौषं शान्तनवे शयाने
पानीयार्थे चोदितेनार्जुनेन ।
भूमिं भित्त्वा तर्पितं तत्र भीष्मं
तदा नाशंसे विजयाय सञ्जय ! ॥३१॥

यदा द्रोणो विविधानस्त्रमार्गान्
निदर्शयन् समरे चित्रयोधी ।
न पाण्डवाञ् श्रेष्ठतरान् निहन्ति
तदा नाशंसे विजयाय सञ्जय ! ॥३२॥

यदाश्रौषं चास्मदीयान् महारथान्
व्यवस्थितानर्जुनस्यान्तकाय ।
संशप्तकान् निहतानर्जुनेन
तदा नाशंसे विजयाय सञ्जय ! ॥३३॥

यदाश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय सञ्जय ! ॥२४॥

यदाभिमन्युं परिवार्य बालं
सर्वे हत्वा हृष्टरूपा बभूवुः ।
महारथाः पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय सञ्जय ! ॥२५॥

यदाश्रौषमभिमन्युं निहत्य
हर्षान्मूढान् क्रोशतो धार्तराष्ट्रान् ।
क्रोधादुक्तं सैन्धवे चार्जुनेन
तदा नाशंसे विजयाय सञ्जय ! ॥२६॥

यदाश्रौषं सैन्धवार्थे प्रतिज्ञां
प्रतिज्ञातां तद्वधायार्जुनेन ।
सत्यां तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय सञ्जय ! ॥२७॥

यदाश्रौषं नागबलैः सुदुःसहं
द्रोणानीकं युयुधानं प्रमथ्य ।
यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ
तदा नाशंसे विजयाय सञ्जय ! ॥२८॥

यदाश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय सञ्जय ! ॥३८॥

यदाश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्म्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय सञ्जय ! ॥४०॥

यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान् पाण्डवानां
तदा नाशंसे विजयाय सञ्जय ! ॥४१॥

यदाश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय सञ्जय ! ॥४२॥

यदाश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन् भ्रातॄणां विग्रहे घोररूपे
तदा नाशंसे विजयाय सञ्जय ! ॥४३॥

यदाश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत !
सदा संग्रामे स्पर्धते यस्तु कृष्णं
तदा नाशंसे विजयाय सञ्जय ! ॥४४॥

यदाश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं संग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय सञ्जय ! ॥४५॥

यदाश्रौषं श्रान्तमेकं प्रयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नशक्तिं
तदा नाशंसे विजयाय सञ्जय ! ॥४६॥

यदाश्रौषं पाण्डवांस्तिष्ठमानान्
गत्वा ह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय सञ्जय ! ॥४७॥

यदाश्रौषं विविधांश्चित्रमार्गान्
गदायुद्धे मण्डलशश्चरन्तम् ।
मिथ्याहतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय सञ्जय ! ॥४८॥

यदाश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान् पाञ्चालान् पाण्डवेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय सञ्जय ! ॥४८॥

यदाश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषीकमवधीद् येन गर्भं
तदा नाशंसे विजयाय सञ्जय ! ॥५०॥

यदाश्रौषं ब्रह्मशिरोऽर्जुनेन
'स्वस्ती'त्युक्त्वास्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय सञ्जय ! ॥५१॥

शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा बन्धुभिः पितृभिर्भ्रातृभिश्च ।
कृतं कार्य्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः" ॥५२॥

---

# नलोपाख्यानम्[1]

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥१॥
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ॥२॥
तथैवासीद् विदर्भेषु भीमो भीमपराक्रमः ।
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ॥
कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं, दमं, दान्तं, दमनं च सुवर्चसम् ॥३॥
दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥४॥
नलोऽपि नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान् ॥५॥

स ददर्श ततो हंसान् जातरूप-परिष्कृतान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥६॥
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा ।
"हन्तव्योऽस्मि न ते राजन्! करिष्यामि तव प्रियम् ॥७॥
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध!
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित्" ॥८॥

---

[1] वनपर्व्वणि—५०-तमेऽध्याये । (Kumbakonam Edition)

एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥९॥
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः, सा ददर्श च तान् खगान् ॥१०॥
सा तानद्भुतरूपान् वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥११॥
दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥१२॥
"दमयन्ति ! नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥१३॥
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि !
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ! ॥१४॥
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत्" ॥१५॥
एवमुक्ता तु हंसेन दमयन्ती विशाम्पते !
अब्रवीत् तत्र तं हंसं "त्वमप्येवं नले वद" ॥१६॥
"तथे"त्युक्त्वाण्डजः कन्यां विदर्भस्य विशाम्पते !
पुनरागम्य निषधान् नले सर्वं न्यवेदयत् ॥१७॥
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निश्वासपरमा सदा ॥१८॥
समीक्ष्य च महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मना कार्यं दमयन्त्याः स्वयंवरम् ॥१९॥

तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छय-पीड़िताः।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥२०॥
नलोऽपि राजा कौन्तेय! श्रुत्वा राज्ञां समागमम्।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥२१॥
दमयन्ती ततो रङ्गं प्रविवेश शुभानना।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥२२॥
नैषधं वरयामास भैमी धर्म्मेण पाण्डव!
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् ॥२३॥
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ॥२४॥
अवाप्य नारीरत्नं तु पुण्यश्लोकोऽपि पार्थिवः।
रेमे सह तया राजन्! शच्येव बलवृत्रहा ॥२५॥
जनयामास च ततो दमयन्त्यां महामनाः।
इन्द्रसेनं सुतञ्चापि इन्द्रसेनां च कन्यकाम् ॥२६॥
वृते तु नैषधे भैम्या लोकपाला महौजसः।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥२७॥
अथाब्रवीत् कलिं शक्रः सम्प्रेक्ष्य बलवृत्रहा।
"द्वापरेण सहायेन कले! ब्रूहि क्व यास्यसि" ॥२८॥
ततोऽब्रवीत् कलिः शक्रं "दमयन्त्याः स्वयंवरम्।
गत्वा हि वरयिष्ये तां, मनो हि मम तां गतम्" ॥२८॥
तमब्रवीत् प्रहस्येन्द्रो "निर्वृत्तः स स्वयंवरः।
वृतस्तया नलो राजा पतिरस्मत्समीपतः" ॥३०॥

एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान् सर्वानुवाचेदं वचस्तदा ॥३१॥
"देवानां मानुषं मध्ये यत् सा पतिमविन्दत ।
तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम्" ॥३२॥
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
"अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः" ॥३३॥
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ।
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
"संहर्तुं नोत्सहे कोपं, नले वत्स्यामि द्वापर ! ॥३४॥
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ।
त्वमप्यक्षान् समाविश्य साहाय्यं कर्त्तुमर्हसि" ॥३५॥
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ।
कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः ।
अकृत्वा पादयोः शौचं, तत्रैनं कलिराविशत् ॥३६॥
स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेद"मेहि दीव्य नलेन वै ॥३७॥
अक्षद्यूते नलं जेता भवान् हि सहितो मया ।
निषधान् प्रतिपद्यस्व जित्वा राज्यं नलं नृपम्" ॥३८॥
एवमुक्तस्तु कलिना पुष्करो नलमभ्यगात् ।
कलिश्चैव वृषो भूत्वा तं वै पुष्करमन्वगात् ॥३९॥
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
"दीव्यावे"त्यब्रवीद् भ्राता वृषेणेति मुहुर्मुहुः ॥४०॥

न चचमे ततो राजा समाह्वानं महामनाः ।
तमक्ष-मद-सम्मत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमरिन्दमम् ॥४१-४२॥
तथा तदभवद् द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर ! बहून् मासान्, पुण्यश्लोकस्त्वजीयत ॥४३॥

दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ।
भयशोकसमाविष्टा राजन् ! भीमसुता ततः ।
चिन्तयामास तत्कार्य्यं सुमहत् पार्थिवं प्रति ॥४४॥
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलञ्च हृतसर्वस्वमुपलभ्येदमब्रवीत् ।
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
"सूतमानय कल्याणि ! महत् कार्य्यमुपस्थितम्" ॥४५-४६॥
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥४७॥

वार्ष्णेयं तु ततो भैमी सान्त्वयच्छ्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥४८॥
"नलस्य दयितानश्वान् योजयित्वा मनोजवान् ।
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥४९॥
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चेमान् यथाकामं वस चान्यत्र गच्छ वा" ॥५०॥

दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥५१॥
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते !
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥५२॥
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ।
आमन्त्र्य भीमं राजानमार्तः शोचन् नलं नृपम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥५३॥
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं चोपययौ तस्य सारथ्येन महीपतेः ॥५४॥
ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किञ्चन ॥५५॥
निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियम् ।
दमयन्त्येकवस्त्राथ गच्छन्तं पृष्ठतोऽन्वगात् ॥५६॥
पुष्करस्तु महाराज ! घोषयामास वै पुरे ।
नले यः सम्यगातिष्ठेत् स गच्छेद् वध्यतां मम ॥५७॥
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर ! ॥५८॥
स तथा नगराभ्यासे सत्कारार्हो न सत्कृतः ।
त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ।
पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन् ।
प्रातिष्ठत ततो राजा, दमयन्ती तमन्वगात् ॥५८-६०॥

क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान् कांश्चिद्धिरण्यसदृशच्छदान् ॥६१॥
स चिन्तयामास तदा निषधाधिपतिर्बली ।
"अस्ति भक्ष्यो ममाद्यायं वसु चेदं भविष्यति" ॥६२॥
ततस्तान् परिधानेन वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥६३॥
उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥६४॥
"वयमक्षाः सुदुर्बुद्धे ! तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि" ॥६५॥
तान् समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्तदा राजन् ! दमयन्तीमथाब्रवीत् ॥६६॥
"येषां प्रकोपादैश्वर्यात् प्रच्युतोऽहमनिन्दिते !
इमे ते शकुना भूत्वा वासो भीरु ! हरन्ति मे ॥६७॥
वषम्यं परमं प्राप्तो दुःखितो हृतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥६८॥
एष पन्था विदर्भाणामसौ गच्छति कोशलान् ।
अतः परं च देशोऽयं दक्षिणो दक्षिणापथः" ॥६९॥
एतद् वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत ! ॥७०॥
ततः सा बाष्पाकुलया वाचा दुःखेन कर्षिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥७१॥

"उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव ! सङ्कल्पं चिन्तयन्त्याः पुनः पुनः ॥७२॥
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुत्क्षमान्वितम् ।
कथमुत्सृज्य गच्छेयं त्वामहं निर्जने वने ? ॥७३॥
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत् सुखम् ।
वने घोरे महाराज ! नाशयिष्याम्यहं क्लमम् ॥७४॥
न च भार्यासमं किञ्चिद् विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद् ब्रवीमि ते" ॥७५॥

नल उवाच—

"एवमेतद् यथात्थ त्वं दमयन्ति ! सुमध्यमे !
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥७६॥
न चाहं त्यक्तुकामस्त्वां, किमलं भीरु ! शङ्कसे ?
त्यजेयमहमात्मानं न त्वेव त्वामनिन्दिते !" ॥७७॥

दमयन्त्युवाच—

"यदि मां त्वं महाराज ! न विहातुमिहेच्छसि ।
तत् किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ? ॥७८॥
यदि चायमभिप्रायस्तव ज्ञातीन् व्रजेदिति ।
सहितावेव गच्छावो विदर्भान् यदि मन्यसे ॥७९॥
विदर्भराजस्तत्र त्वां पूजयिष्यति मानद !
तेन त्वं पूजितो राजन् ! सुखं वत्स्यसि नो गृहे" ॥८०॥

नल उवाच--

"यथा राज्यं तव पितुस्तथा मम न संशयः।
न तु तत्र गमिष्यामि विषमस्थः कथञ्चन ॥८१॥
कथं समृद्धो गत्वाहं तव हर्षविवर्धनः।
परिच्युतो गमिष्यामि तव शोकविवर्धनः?" ॥८२॥
इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः।
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृताम् ॥८३॥

तावेकवस्त्रसंवीतावटमानावितस्ततः।
क्षुत्पिपासा-परिश्रान्तौ सभां काञ्चिदुपेयतुः ॥८४॥
तां सभामुपसम्प्राप्य तदा स निषधाधिपः।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥८५॥
सुप्तायां दमयन्त्यां तु नलो राजा विशाम्पते!
शोकोन्मथितचित्तः सन् न स्म शेते यथा पुरा ॥८६॥
स विनिश्चित्य बहुधा विचार्य च पुनः पुनः।
उत्सर्गं मन्यते श्रेयो दमयन्त्या नराधिप! ॥८७॥
सोऽवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः।
सुप्तामुत्सृज्य तां भार्य्यां विलप्य करुणं बहु ॥८८॥

अपक्रान्ते नले राजन्! दमयन्ती गतक्लमा।
अबुध्यत वरारोहा सन्त्रस्ता विजने वने ॥८९॥
अपश्यमाना भर्तारं शोक-दुःखसमन्विता।
प्राक्रोशदुच्चैः सन्त्रस्ता "महाराजे"ति नैषधम् ॥९०॥

"हा नाथ! हा महाराज! हा स्वामिन्! किं जहासि माम्?
हा हतास्मि, विनष्टास्मि, भीतास्मि विजने वने ॥८१॥
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ!
यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति" ॥८२॥
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः।
"हा हा राजन्नि"ति मुहुरितश्चेतश्च धावति ॥८३॥
सहसाभ्यागतां भैमीमभ्यास-वशवर्त्तिनीम्।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥८४॥
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥८५॥
"श्रान्तस्य ते क्षुधार्तस्य परिम्लानस्य नैषध!
कः श्रमं राजशार्दूल! नाशयिष्यति तेऽनघ!" ॥८६॥
ततः कश्चिन्मृगव्याधो विचरन् गहने वने।
आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ॥८७॥
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम्।
मुखतः पाटयामास शस्त्रेण निशितेन च ॥८८॥
मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन च।
समाश्वास्य कृताहारामथ पप्रच्छ भारत! ॥८९॥
"कस्य त्वं मृगशावाक्षि! कथं चाभ्यागता वनम्?
कथं वेदं महत् कृच्छ्रं प्राप्तवत्यसि भामिनि!" ॥१००॥
दमयन्ती तथा तेन पृच्छ्यमाना विशाम्पते!
सर्वमेतद् यथावृत्तमाचचक्षेऽस्य भारत! ॥१०१॥

तामधवस्त्रसंवीतां पूर्णचन्द्रनिभाननाम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥१०२॥
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोष-समाविष्टा प्रजज्वालेव मन्युना ॥१०३॥
स तु पापमतिः क्रुद्धः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥१०४॥
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीत-वाक्पथे काले शशापैनं रुषान्विता ॥१०५॥
"यद्यहं नैषधादन्यं मनसापि न चिन्तये ।
तदायं पततु क्षुद्रः परासुर्मृगजीवनः!" ॥१०६॥
उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥१०७॥

सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागण-नादितम् ॥१०८॥
दारुणामटवीं प्राप्य भर्तृव्यसनपीड़िता ।
विदर्भ-तनया राजन् ! विललाप सुदुःखिता ॥१०९॥
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ।
सा गत्वा त्रीनहोरात्रान् ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननशोभितम् ॥११०॥
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
अभिवाद्य तपोवृद्धान् विनयावनता स्थिता ॥१११॥

पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
"आस्यतामि"त्यथोचुस्ते "ब्रूहि किं करवामहे ॥११२॥
दृष्ट्वेव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः; समाश्वसिहि, मा शुचः ॥११३॥
अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः ?
अस्याश्च नद्याः कल्याणि! वद सत्यमनिन्दिते!" ॥११४॥

दमयन्त्युवाच—

"विदर्भेषु महीपालो भीमो नाम महाद्युतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥११५॥
निषधाधिपतिर्धीमान् नलो नाम महायशाः ।
वीरः संग्रामजिद् विद्वान् मम भर्ता विशाम्पतिः ॥११६॥
स कैश्चिन्निकृतिप्रज्ञैरनार्य्यैरकृतात्मभिः ।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥११७॥
अन्वेषमाणा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥११८॥
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात्" ॥११९॥

तथा विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥१२०॥
"उदर्कस्तव कल्याणि! कल्याणो भविता शुभे!
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम्" ॥१२१॥

एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तथा ॥१२२॥
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्व-रथसङ्कुलम् ॥१२३॥
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ।
उन्मत्तरूपा, शोकार्त्ता, तथा वस्त्रार्धसंवृता ।
कृशा, विवर्णा, मलिना, पांशुध्वस्त-शिरोरुहा ॥१२४-१२५॥
तां दृष्ट्वा तत्र मनुजाः केचिद् भीताः प्रदुद्रुवुः ।
केचिच्चिन्तां परां जग्मुः, केचित्तत्र विचुक्रुशुः ॥१२६॥
प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे ।
अकुर्वत दयां केचित् पप्रच्छुश्चापि भारत ! ॥१२७॥
"कासि ? कस्यासि कल्याणि ! किं वा मृगयसे वने ?
त्वां दृष्ट्वा व्यथिताः स्मेह, कच्चित् त्वमसि मानुषी ? ॥१२८॥
वद सत्यं, वनस्यास्य पर्वतस्यास्य वा दिशः ।
देवता त्वं हि कल्याणि ! त्वां वयं शरणं गताः" ॥१२९॥
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीड़िता ॥१३०॥
"मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्य्यां भर्तृदर्शन-लालसाम् ॥१३१॥
विदर्भराण्, मम पिता, भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥१३२॥

यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलममित्रगणसूदनम्” ॥१२३॥

तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
“मनुष्यं नलनामानं न पश्यामि यशस्विनि !” ॥१२४॥
साब्रवीद् वणिजः सर्वान् सार्थवाहं च तं ततः ।
“क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हसि” ॥१२५॥

सार्थवाह उवाच—

“सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः ।
क्षिप्रं जनपदं गन्ता लाभाय नृवरात्मजे !” ॥१२६॥
सा तच्छ्रुत्वानवद्याङ्गी सार्थवाह-वचस्तदा ।
जगाम सह तेनैव सार्थेन पतिलालसा ॥१२७॥

अथ काले बहुतिथे वने महति दारुणे ।
तड़ागं सर्वतोभद्रं पद्मसौगन्धिकं महत् ॥
ददृशुर्वणिजो रम्यं प्रभूत-यवसेन्धनम् ।
निर्मल-स्वादुसलिलं मनोहारि सुशीतलम् ॥१२८॥
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ।
उवास सार्थः सुमहान् वेलामासाद्य पश्चिमाम् ॥१२९॥

अथार्धरात्रसमये निःशब्दस्तिमिते तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
पानीयार्थं गिरिनदीं मदप्रस्रवणाविलम् ॥१४०॥
अथापश्यत सार्थं तं सार्थजान् सुबहून् गजान् ।

ते तान् ग्राम्यगजान् दृष्ट्वा सर्वं वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ॥१४१॥
तेषामापततां वेगः करिणां दुःसहोऽभवत् ।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां चितौ ॥१४२॥
मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
ते तं ममर्दुः सहसा चेष्टमानं महीतले ॥१४३॥
हाहाकारं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः ।
केचिद्दन्तैः, करैः केचित्, केचित् पद्भ्यां हता गजैः ॥१४४॥
एवम्प्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।
राजन् ! विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥१४५॥
अथोचत् तत्र वैदर्भी, "किं नु मे दुष्कृतं कृतम् ।
या नाहमद्य मृदिता हस्तियूथेन दुःखिता ? ॥१४६॥
प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम् ।
'नाप्राप्तकालो म्रियते' श्रुतं वृद्धानुशासनम्" ॥१४७॥
एवमादीनि दुःखानि सा विलप्य वराङ्गना ।
हतशिष्टैः सह तदा ब्राह्मणैर्वेदपारगैः ।
अगच्छद्राजशार्दूल ! चन्द्रलेखेव शारदी ॥१४८॥
गच्छन्ती सा चिराद् बाला पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यदर्शिनः ।
अथ वस्त्रार्धसंवीता प्रविवेश पुरोत्तमम् ॥१४९॥
तां विह्वलां, कृशां, दीनां, मुक्तकेशीममार्जिताम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥१५०॥

प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥१५१॥
सा तैः परिवृतागच्छत् समीपं राजवेश्मनः ।
तां प्रासाद-गतापश्यद्राजमाता जनैर्वृताम् ॥१५२॥
धात्रीमुवाच, "गच्छैनामानयेह ममान्तिकम् ।
जनेन क्लिश्यतेऽनाथा दुःखिता शरणार्थिनी ॥१५३॥
तादृग्रूपं च पश्यामि विद्योतयति मे गृहम् ।
उन्मत्तवेशप्रच्छन्ना श्रीरिवायतलोचना" ॥१५४॥
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्! दमयन्तीमपृच्छत ॥१५५॥
"एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे कासि, कस्य वा ॥१५६॥
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे!" ॥१५७॥
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
"मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥१५८॥
सैरिन्ध्रीं जातिसम्पन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायम्प्रतिश्रयाम् ॥१५९॥
असंख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।
भक्ताहमपि तं वीरं छायेवानपगामिनी ॥१६०॥
तस्य दैवात् प्रसङ्गोऽभूदतिमात्रं सुदेवने ।
द्यूते स निर्जितश्चैव वनमेक उपेयिवान् ॥१६१॥

तमेकवसनं वीरमुन्मत्तमिव विह्वलम् ।
आश्वासयन्ती भर्तारमहमन्वगमं वनम् ॥१६२॥
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान् मामनागसम्" ॥१६३॥

तामश्रु-परिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताब्रवीदार्ता भैमीमार्तस्वरां स्वयम् ॥१६४॥
"वस त्वं मयि कल्याणि ! प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे ! भर्तारं पुरुषा मम" ॥१६५॥
सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत ।
सर्वकामैः सुविहितैर्निरुद्वेगावसत् तदा ॥१६६॥

उत्सृज्य दमयन्तीं तु नलो राजा विशाम्पते !
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥१६७॥
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
"अभिधाव नले"त्युच्चैः "पुण्यश्लोके"ति चासकृत् ॥१६८॥
"मा भै"रिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥१६९॥
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच, "विद्धि मां नाम्ना नागं कर्कोटकं नृप !
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान्" ॥१७०॥

तं गृहीत्वा नलः प्रायाद्देशं दाव-विवर्जितम् ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ॥१७१॥

"पदानि गणयन् गच्छ स्वानि नैषध ! कानिचित् ।
तत्र तेऽहं महाबाहो! श्रेयो धास्यामि यत्परम्" ॥१७२॥
ततः सङ्ख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं चिप्रमन्तरधीयत ॥१७३॥
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
"मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥१७४॥
यत्कृते चासि निकृतो दुःखेन महता नल !
विषेण स मदीयेन दुःखं त्वयि निवत्स्यति ॥१७५॥
गच्छ राजन्नितः 'सूतो बाहुकोऽह'मिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः ॥१७६॥
स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै ।
भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा ॥१७७॥
अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे ।"
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥१७८॥
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥१७९॥
हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान् प्रस्थापयामास नलदर्शनकाङ्क्षया ॥१८०॥
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥१८१॥
तां समाक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥१८२॥

उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत्।
"अहं सुदेवो वैदर्भि ! भ्रातुस्ते दयितः सखा ॥१८३॥
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ।
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते" ॥१८४॥

अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात् तदा ।
जगाम यत्र सा बाला ब्राह्मणेन समागता ॥१८५॥
ततः सुदेवमानाय्य राजमाता विशाम्पते !
पप्रच्छ, "भार्या कस्येयं, सुता वा कस्य भामिनी ?"॥१८६॥

सुदेव उवाच—

"विदर्भराजो धर्मात्मा भीमो नाम महाद्युतिः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥१८७॥
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥१८८॥
स द्यूतेन जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित्" ॥१८९॥

उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
"भगिन्या दुहिता मेऽसि पिप्लनानेन सूचिता ॥१९०॥
यथैव ते पितुर्गेहं तथैव मम भाविनि !
यथैव च ममैश्वर्यं दमयन्ति ! तथा तव" ॥१९१॥

तां प्रहृष्टेन मनसा दमयन्ती विशाम्पते !
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥१९२॥

"अज्ञायमानापि सती सुखमस्म्युषिता त्वयि ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥१८३॥
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ?" ॥१८४॥
प्रास्थापयद्राजमाता यानेन नरवाहिना ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥१८५॥
ततः सा नचिरादेव विदर्भानगमत् पुनः ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥१८६॥

सा व्युष्टा रजनी, तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥१८७॥
"मां चेदिच्छसि जीवन्तीं मातः ! सत्यं ब्रवीमि ते ।
नरवीरस्य वै तस्य नलस्यानयने यत" ॥१८८॥
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
"दमयन्ती तव सुता भर्तारमनुशोचति ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे" ॥१८९॥

तया प्रणोदितो राजा ब्राह्मणान् वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा "यतध्वं नलदर्शने" ॥२००॥
अथ तानब्रवीद् भैमी "सर्वराष्ट्रेष्विदं वचः ।
ब्रूयास्त जनसंसत्सु तत्र तत्र पुनः पुनः ॥२०१॥
'क्व नु त्वं कितव ! छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ! ॥२०२॥

तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव !
प्रसादं कुरु वै वीर ! प्रतिवाक्यं वदस्व च' ॥२०३॥
एवं ब्रुवाणान् यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व नु वर्त्तते ॥२०४॥
यश्च वो वचनं श्रुत्वा ब्रूयात् प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः !" ॥२०५॥
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥२०६॥
"नैषधं मृगयाणेन दमयन्ति ! मया नलम् ।
अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः ॥२०७॥
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ! ॥२०८॥
तच्छ्रुत्वा नाब्रवीत् किञ्चिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद् भाष्यमाणो मयासकृत् ॥२०९॥
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मिष्टकर्ता च भोजने ॥२१०॥
स विनिःश्वस्य बहुशो रुदित्वा च पुनः पुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥२११॥
'वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन ।
प्राणांश्चारित्र-कवचान् धारयन्ति कुलस्त्रियः ॥२१२॥

विषमस्थेन मूढ़ेन परिभ्रष्टसुखेन तु ।
यत् सा तेन परित्यक्ता तत्र न क्रोद्धमर्हति ॥२१३॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य न श्यामा क्रोद्धमर्हति' ॥२१४॥
तस्य तद् वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती, राज्ञश्चैव निवेदय" ॥२१५॥
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशाम्पते !
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥२१६॥
"अयमर्थो न संवेद्यो भीमे मातः ! कदाचन ।
त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम्" ॥२१७॥
ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर !
अब्रवीत् सन्निधौ मातुर्दुःखशोक-समन्विता ॥२१८॥
"गत्वा सुदेव ! नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि सम्पतन्निव कामगः ॥
'आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
यथा च गणितः कालः श्वोभूते स भविष्यति' " ॥२१९॥
एवं तया यथोक्तो व गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज ! सुदेवो ब्राह्मणस्ततः ॥२२०॥
श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
सान्त्वयञ् श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥२२१॥
"विदर्भान् यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ ! मन्यसे यदि बाहुक !" ॥२२२॥

एवमुक्तस्य कौन्तेय ! तेन राज्ञा नलस्य ह ।
व्यदीर्य्यत मनो दुःखात्, प्रदध्यौ स महामनाः ॥२२३॥
"दमयन्ती वदेदेतत् कुर्याद् दुःखेन मोहिता ।
अस्मदर्थं भवेद्वायमुपायश्चिन्तितो महान् ॥२२४॥
नृशंसं बत वदर्भी कर्त्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥२२५॥
मम शोकेन संविग्ना नैराश्यात् तनुमध्यमा ।
नैवं सा कर्हिचित् कुर्यात् सापत्या च विशेषतः ॥२२६॥
यदत्र सत्यं वासत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै कामानात्मार्थं च करोम्यहम्" ॥२२७॥
　इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥२२८॥
"प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप !
एकाह्ना पुरुषव्याघ्र ! विदर्भनगरीं नृप !" ॥२२९॥
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान् रथे नलः ॥२३०॥
ततो युक्तं रथं राजा समारोहत् त्वरान्वितः ।
ते नोद्यमाना विधिवद् बाहुकेन हयोत्तमाः ।
समुत्पेतुरथाकाशं रथिनं मोहयन्ति च ॥२३१॥
　ततो विदर्भान् सम्प्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥२३२॥
तं भीमः प्रतिजग्राह पूजया परया ततः ।

"किं कार्यं ? स्वागतं तेऽस्तु" राज्ञा पृष्टश्च भारत !
नाभिजज्ञे स नृपतिर्दुहित्रर्थं समागतम् ॥२२३॥
ऋतुपर्णोऽपि राजा स धीमान् सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कञ्चन ।
नैव स्वयंवरकथां, न च विप्र-समागमम् ॥२२४॥
ततो विगणयन् राजा मनसा कोशलाधिपः ।
"आगतोऽस्मी "त्युवाचैनं "भवन्तमभिवादकः" ॥२२५॥
दमयन्ती तु शोकार्त्ता दृष्ट्वा भाङ्गासुरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभाम् ॥२२६॥
ततः समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत ॥२२७॥

केशिन्युवाच—

"स्वागतं ते मनुष्येन्द्र ! कुशलं ते ब्रवीम्यहम् ।
कदा व प्रस्थिता यूयं किमर्थमिह चागताः ?" ॥२२८॥

बाहुक उवाच—

"श्रुतः स्वयंवरो राज्ञा कोशलेन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ॥२२९॥
श्रुत्वैतत् प्रस्थितो राजा शत-योजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमप्यस्य सारथिः" ॥२४०॥

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥२४१॥
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलदर्शनकाङ्क्षया ॥२४२॥
"परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ।
स वा प्रविश्यतां मातर्मां वानुज्ञातुमर्हसि" ॥२४३॥
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ !
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥२४४॥

ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज ! बाहुकं वाक्यमब्रवीत् ॥२४५॥
"पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक !
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ? ॥२४६॥
किमु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान् निद्रयार्दिताम् ?" ॥२४७॥

नल उवाच—

"मम राज्यं प्रनष्टं यन्नाहं तत् कृतवान् स्वयम् ।
कलिना तत् कृतं भीरु ! यच्च त्वामहमत्यजम् ॥२४८॥
तच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ।
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ॥२४९॥

कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु ! कर्हिचित् ? ॥२५०॥
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्वभर्तारं द्वितीयं वरयिष्यति" ॥२५१॥

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥२५२॥
"न मामर्हसि कल्याण ! दोषेण परिशङ्कितुम् ।
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥२५३॥
ततस्त्वां ब्राह्मणो विद्वान् पर्णादो नाम पार्थिव !
अभ्यगच्छत् कोशलायामृतुपर्ण-निवेशने ॥२५४॥
तेन वाक्येन सम्यक् ते प्रतिवाक्ये तथाहृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥२५५॥
त्वामृते न हि लोकेऽन्य एकाह्ना पृथिवीपते !
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ! ॥२५६॥
स्पृशेयं तेन सत्येन पादावेतौ महीपते !
यथा नासत्कृतं किञ्चिन्मनसापि चराम्यहम् ॥२५७॥
अयं चरति लोकेऽस्मिन् भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान् यदि पापं चराम्यहम् ॥२५८॥
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति ये ।
ते ब्रुवन्तु यथातथ्यमेते वाद्य त्यजन्तु माम्" ॥२५९॥

एवमुक्तो ततो वायुरन्तरीक्षादभाषत ।
"नैषा कृतवती पापं नल ! सत्यं ब्रवीमि ते ॥२६०॥
साक्षिणो रक्षिणश्चास्या वयं त्रीन् परिवत्सरान् ।
उपायो विहितश्चायं त्वदर्थमतुलोऽनया" ॥२६१॥
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देव-दुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥२६२॥
तदद्भुतमयं दृष्ट्वा नलो राजाथ भारत !
दमयन्तीं विशङ्कां तां व्यपाकर्षदरिन्दमः ॥२६३॥

ततस्तद्वस्त्रमजरं प्रावृणोद् वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥२६४॥
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥२६५॥
भैमीमपि नलो राजा भजमानां यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावदभ्यनन्दत ॥२६६॥
स चतुर्थे ततो वर्षे सङ्गम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान् परमां मुदम् ॥२६७॥
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसञ्जात-शस्येव तोयं प्राप्य वसुन्धरा ॥२६८॥

---

# सावित्र्युपाख्यानम्[1]

आसीन्मद्रेषु धर्मात्मा राजा परमधार्म्मिकः।
पार्थिवोऽश्वपतिर्नाम सर्व्वभूतहिते रतः।
क्षमावाननपत्यश्च सत्यवाग् विजितेन्द्रियः।
अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥१-२॥
अपत्यपरिलाभार्थं तीव्रं नियममास्थितः।
काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः।
हुत्वा शतसहस्रं स सावित्र्या राजसत्तमः।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥३-४॥
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात्।
रूपिणी च तदा राजन्! दर्शयामास तं नृपम्।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥५॥
"वरं वृणीष्वाश्वपते! मद्रराज! यदीप्सितम्।
न प्रमादश्च धर्म्मेषु कर्त्तव्यस्ते कथञ्चन" ॥६॥

अश्वपतिरुवाच—

"अपत्यार्थः समारम्भः कृतो धर्म्मस्तया मया।
पुत्रा मे बहवो देवि! भवेयुः कुलभावनाः" ॥७॥

सावित्र्युवाच—

"पूर्व्वमेव मया राजन्नभिप्रायमिमं तव।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः।
कन्या तेजस्विनी सौम्य! क्षिप्रमेव भविष्यति ॥८॥

---

[1] वनपर्व्वणि—२९४-तमेऽध्याये।

उत्तरञ्च न ते किञ्चिद् व्याहर्त्तव्यं कथञ्चन ।
पितामह-नियोगेन तुष्टा ह्येतद् ब्रवीमि ते" ॥९॥

अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये चावसद् वीरः प्रजा धर्मेण पालयन् ॥१०॥
कस्मिंश्चित् तु गते काले ज्येष्ठा वै धर्मचारिणी ।
महिषी सुषुवे तस्य कन्यां राजीवलोचनाम् ॥११॥
सावित्र्या प्रीतया दत्ता, सावित्र्या हुतया ह्यपि ।
"सावित्री"त्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥१२॥

सा विग्रहवतीव श्रीर्व्यवर्द्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥१३॥
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद् वरयामास तेजसा प्रतिवारितः ॥१४॥
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितोऽभवत् ॥१५॥

राजोवाच—

"पुत्रि ! प्रदानकालस्ते, न च कश्चिद् वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥१६॥
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम्" ॥१७॥

साभिवाद्य पितुः पादौ व्रीड़ितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥१८॥

सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥१८॥
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्व्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥२०॥
अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ! ॥२१॥
ततोऽभिगम्य तीर्थानि सर्व्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥२२॥
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव सहसा चक्रे पादाभिवन्दनम् ॥२३॥
सा "ब्रूहि विस्तरेणे"ति पित्रा सञ्चोदिता शुभा ।
तदेव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥२४॥

सावित्र्युवाच—
"आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चान्धो बभूव ह ॥२५॥
विनष्टचक्षुषस्तस्य बालपुत्त्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्व्ववैरिणा ॥२६॥
स बालवत्सया सार्द्धं भार्य्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥२७॥
तस्य पुत्त्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः" ॥२८॥

नारद उवाच—

"अहो बत महत् पापं सावित्र्या नृपते ! कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥२९॥
सत्यं वदत्यस्य पिता, सत्यं माता प्रभाषते ।
तथास्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति ॥३०॥
विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥३१॥
ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ॥३२॥
एको दोषोऽस्ति नान्योऽस्य, सोऽद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति" ॥३३॥

राजोवाच—

"एहि सावित्रि ! गच्छस्व, अन्यं वरय शोभने !
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः" ॥३४॥

सावित्र्युवाच—

"सकृदंशो निपतति, सकृत् कन्या प्रदीयते ।
सकृदाह 'ददानी'ति, त्रीण्येतानि सकृत् सकृत् ॥३५॥
दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद् वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम् ॥३६॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्, प्रमाणं मे मनस्ततः" ॥३७॥

नारद उवाच—

"स्थिरा बुद्धिर्नरश्रेष्ठ ! सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥३८॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव" ॥३९॥

राजोवाच—

"अविचाल्यमेतदुक्तं तथ्यञ्च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान् मम" ॥४०॥

नारद उवाच—

"अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत् सर्व्वेषां भद्रमस्तु वः" ॥४१॥

ततो वृद्धान् द्विजान् सर्व्वान् ऋत्विजः सपुरोहितान् ।
राजाहूय दिने पुण्ये प्रययौ सह कन्यया ॥४२॥
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्द्धं राजर्षिं तमुपागमत् ॥४३॥
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥४४॥
तस्यार्घ्यमासनं चैव समावेद्य स धर्मवित् ।
"किमागमनमि"त्येवं राजा राजानमब्रवीत् ॥४५॥

अश्वपतिरुवाच—

"सावित्री नाम राजर्षे ! कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ ! स्नुषार्थे त्वं गृहाण मे" ॥४६॥

द्युमत्सेन उवाच—

"च्युताः स्म राज्याद् वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः।
कथं त्वनर्हा वनवासमाश्रमे
निवत्स्यते क्लेशमिमं सुता तव?" ॥४७॥

अश्वपतिरुवाच—

"आशां नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च।
अभितश्चागतं प्रेम्णा प्रत्याख्यातं न मार्हसि" ॥४८॥

द्युमत्सेन उवाच—

"पूर्वमेवाभिलषितः सम्बन्धो मे त्वया सह।
भ्रष्टराज्यस्त्वहमिति तत एतद् विचारितम् ॥४९॥
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः।
स निर्वर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः" ॥५०॥

ततः सर्वान् समानाय्य द्विजानाश्रमवासिनः।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥५१॥
दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम्।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥५२॥
सत्यवानपि तां भार्य्यां लब्ध्वा सर्वगुणान्विताम्।
मुमुदे सा च तं लब्ध्वा भर्त्तारं मनसेप्सितम् ॥५३॥

गते पितरि सर्वाणि संन्यस्याभरणानि सा।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥५४॥

